॥ श्रीः ॥

॥ श्रीरामो जयति ॥

॥ श्रीजानकीचरणपङ्कजाभ्यां नमः ॥

अथ श्रीरामभक्तिकल्पलतायाम्

उत्तरफल्गुनीनक्षत्रपुण्यकालप्रयुक्तः

## ॥ सीतापूजाप्रकारः ॥

अगस्त्यः—

राजराज महाराज जनकानां कुलोद्वह ।
पावितोऽयं त्वया वंशो निमेराज्ञो महात्मनः ॥१॥

धन्यस्त्वं यस्य जगतां जननी पुत्रिकाऽभवत् ।
सा मूलप्रकृतिर्ज्ञेया सा माया सा श्रुतिः स्मृतिः ॥२॥

सा स्मृता सर्वपापघ्नी दृष्टा संपत्प्रदायिनी ।
प्रणताऽज्ञानशमनी स्तुता मोक्षप्रदायिनी ॥३॥

स्त्रीधर्मस्याखिलस्योपदेशार्थं सा वनं गता ।
लङ्कां गता महत् कष्टमन्वभूद्भुवनेश्वरी ॥४॥

तत्वज्ञा मुनयस्सर्वे वनेषु च मठेषु च ।
नगरेषु च विद्वांसः श्रुतिस्मृत्युक्तमार्गतः ॥५॥

कृत्वा प्रतिकृतिं तस्याः पूजयन्ति सुमैश्शुभैः ।
तेषां प्रसन्ना वरदा देवी प्रत्यक्षमेत्य च ॥६॥

अनुगृह्णाति बहुशः कांक्षितानि प्रदाय च ।
जानासि तां त्वं पुत्रीति अङ्कमारोपयस्यपि ॥७॥

आह्वयस्यपि वत्सेति * कदाचित्तर्जयस्यपि ।
निजनाथेन सानन्दं विहरत्यद्य सा सुखम् ॥८॥

तस्या गुणगणान् वक्तुं विशेषात् पुरतस्तव ।
अहं कथं नु शक्तस्स्यामपि वर्षायुतैरपि ॥९॥

आश्रितेषु च वात्सल्यं दीनेषु करुणाऽधिका ।
प्रभुत्वं सर्वलोकानां पातिव्रत्यगुणस्तथा ॥१०॥

तां विनाऽन्यत्र दृश्यन्ते नक्वापि भुवनत्रये ।
सा बालेति नमन्तव्या नस्त्रीति च निकर्षतः ॥११॥

तप्त्वा बहुतपस्सम्यगनेकयुगसङ्ख्यया ।
फलं तस्यानसूयाऽत्री सौभाग्यद्रव्यजातकम् ॥१२॥

प्राप्य तद्विनियोगार्थं चिरकालं तपोधनौ ।
प्रतीक्षेते स्म सीताया जन्मभूम्यास्तवाङ्गणे ॥१३॥

एतज्ज्ञात्वा तव सुता भर्त्रा सार्द्धं वनं गता ।
तयोराश्रममागाच्च वनवासनिभेन च ॥१४॥

तामागतां स्वमावासं अत्रिर्वीक्ष्य महातपाः ।
प्रशशंस प्रशस्तव्यां भर्तृपार्श्वगतामपि ॥१५॥

स्त्रीभिरेव हि संपूज्या स्त्रीति न्यायानुसारतः ।
प्रेषयामास तां पत्न्या अनसूयासमीपतः ॥१६॥

---

* आर्षस्सन्धिः ॥

तां वन्दमानामाश्लिष्य स्वाङ्कमारोप्य भक्तितः।
स्तुत्वा तद्गुणसामग्रीमनन्यस्त्रीजनस्थिताम् ॥१७॥

पूतां निजां तनुं मेने वाचं चापि तपस्विनी।
श्रोत्रं चापि तथा कर्तुं तद्वाचां श्रवणेन च ॥१८॥

तस्याः स्वयंवरकथां शुश्राव कथितां तया।
अथ सा पलिता वृद्धा कंपमानाङ्गकाऽपि च ॥१९॥

केशान्प्रसाधयामास विन्यस्याऽम्लानमालिकाः।
धारयित्वा दिव्यवस्त्रं कञ्चुळीमपि कानकीम् ॥२०॥

दिव्यगन्धैर्लेपयित्वा शुभैर्मलयजद्रवैः।
भूषयित्वा च सर्वाङ्गं दिव्यैराभरणैरपि ॥२१॥

दृष्ट्वा लोकोत्तरं रूपं चक्षुर्मेने कृतार्थितम्।
भर्तुस्समीपे तां देशे स्थापयित्वा तथाविधाम् ॥२२॥

तद्द्वन्द्वं वीक्ष्य तपसस्साफल्यं सा ह्यमन्यत।
एवं तपस्विनां वर्यास्त्रिमूर्तिजनकोऽप्यसौ ॥२३॥

अत्रिस्तां पूजयामास किं पुनः प्राकृतो जनः।
अन्यां शृणु प्रवक्ष्यामि तत्प्रभावाश्रयां कथाम् ॥२४॥

यस्याः श्रवणमात्रेण नरः पापात् प्रमुच्यते।
कान्यकुब्जे द्विजः कश्चिदभवद्धर्मतत्परः ॥२५॥

वेदवेदाङ्गतत्वज्ञो धर्मशील इति श्रुतः।
तस्य भार्याऽभवत्साध्वी सुमुखी नाम नामतः ॥२६॥

ह्रीश्रीकीर्तिसमा रूपे पातिव्रत्यपरायणा।

तावन्योन्यानुरागार्द्रौ समेतौ सर्वसंपदा ॥२७॥

गृहस्थधर्मानखिलान् सश्रद्धावन्वतिष्ठताम् ।
विदितं खलु नारीणां मनूनानामपि श्रियां ॥२८॥

दरिद्रस्यापि भवनं पितुश्चित्ताय रोचते ।
सर्वसंपत्समृद्धायाः सुमुख्या भर्तृवेश्मनि ॥२९॥

मासं पितुर्गृहे वासो वत्सरे वत्सरेऽभवत् ।
कान्यकुब्जान्तिके ग्रामे पञ्चयोजनदूरगे ॥३०॥

तस्याः पिताऽवसद्विप्रो भारद्वाजाभिधानकः ।
स धनाढ्योऽभवत्पूर्वं वाणिज्ये धूर्तसख्यतः ॥३१॥

दरिद्रोऽभूत् कुटुंबस्य भरणेऽशक्ततां गतः ।
स चिन्तयित्वा स्वसुतां धनाढ्यामनपत्यकाम् ॥३२॥

अभ्येत्य तस्याः किमपि भर्तुरज्ञातमेव च ।
गृहीत्वाऽप्यागमिष्यामि धनधान्यादिकं त्विति ॥३३॥

जामातुर्गेहमगम दुभाभ्यां पूज्यते स्म च ।
अथ प्राह मिथः पुत्री मुषित्वा दिनपञ्चकम् ॥३४॥

भारद्वाजः—

वत्से धन्याऽसि सुमुखि पत्याऽनेनात्र सङ्गता ।
महाधनाढ्यस्ते भर्ता गरिष्ठश्च गुणैरपि ॥३५॥

त्वत्पितृत्वेन तनये अहमप्यस्मि पुण्यवान् ।
किञ्चिद्वक्तुमिहेच्छामि वचोभर्तुरसान्निधौ ॥३६॥

विदितं ते धनाढ्योऽह मासं यक्षाधिपोपमः ।

वाणिज्येनाद्य मे सर्वं धनं नष्टं कुदैवतः ॥३७॥
कुटुंबभरणं कष्टं जायतेऽद्य दिनेदिने।
साढ्व्या अपिच ते मातुर्वाचो मे हृदयच्छिदः ॥३८॥
भ्रातॄणां तव बालाना मसह्यं रोदनं सदा।
जिघृक्षुः किमपि त्वत्तः प्राप्तोऽस्मि भवनं तव ॥३९॥
यथात्र मन्यसे वत्से माचिरं क्रियतां वचः।

सुमुखी—

तात किं मन्यसे मां त्वं हस्तन्यस्तधनां सदा ॥४०॥
व्ययस्य कस्यचिद्धेतो स्त्वज्ञामात्राऽर्पिते धने।
तत्र त्र्यंशान् व्ययीकृत्य पादमेकं प्रशेषये ॥४१॥
एवं मिळितमेतत्ते कार्यार्थमददां पुरा।
याचस्यद्य हि तत्स्मृत्वा नास्ति काचोऽद्य मे वशे॥४२॥
एकतोऽनेन जिह्रेमि खिद्येऽहं चान्यतः पितः।
तव दारिद्र्यमोक्षाय यत्कर्तव्यं मया भवेत् ॥४३॥
तदद्योपदिश त्वं मे कर्तास्मि निखिलं तथा।

अगस्त्यः—

इति पुत्र्या वचः श्रुत्वा पिताऽस्याः प्रेममेदुरम् ॥४४॥
क्षणं दुरात्मा सञ्चिन्त्य स्वभावक्रूरया धिया।
दारिद्र्यादपथारोही वाचमेतामुवाच ह ॥४५॥

भारद्वाजः—

निभेन केनचिद्वत्से नेष्ये त्वां मामकं गृहम्।

तत्र गत्वा ततोऽज्ञात्ते महामूल्यं तु भूषणम् ॥४६॥

आदाय तच्च विक्रीय कृच्छ्रं तात्कालिकं मम
अपनेष्यामि सुभगे कृतार्थः स्यामहं ततः ॥४७॥

पृच्छते त्वं वक्ष्यसे च भर्त्रे चोरहृतं त्विति ।
दिनानि पञ्चषाण्येष कुपितः स्यात् त्वयि ध्रुवम् ॥४८॥

क्रमेण स प्रसन्नस्स्या देवं कुरु च मत्कृते ।

अगस्त्यः—

एतच्छ्रुत्वा पितुर्वाक्य मनुमेने तथाऽस्त्विति ॥४९॥

स्त्रीस्वभावाच्च पितरि प्रेमभाराच्च सा सुता ।
भारद्वाजस्ततो धर्मशीलं प्राप्य विमूढधीः ॥५०॥

सुतस्य कर्णवेधाय नेष्यामि तनयामिति ।
प्रार्थयामास झटिति गन्तव्यमिति चाब्रवीत् ॥५१॥

धर्मशीलः—

आगतायास्सुतायास्ते स्थित्वा तव तु सद्मनि ।
द्वावेव हि गतौ मासौ पुनरेनां निनीषसि ॥५२॥

अत एनां पुनर्गन्तुं नाभ्यनुज्ञातुमुत्सहे ।
गताऽऽगतेन पुत्र्यास्ते धर्मो मे भज्यते मुहुः ॥५३॥

भारद्वाजः—

दिवसान् सप्त जामातः क्षमस्व कृपया मयि ।
अष्टमे दिवसे नूनं प्रापयिष्यामि तां पुनः ॥५४॥

गृहं शून्यमिव स्यान्मे विना तां शुभकर्मणि ।

अगस्त्यः—

अभ्यनुज्ञाप्य कथमप्येवमेनं दुराशयः ॥५५॥
धृतसर्वाभरणया प्रतस्थे सुतया सह ।
तां तथा नयतः पद्भ्यां मार्गे कान्तारसंश्रये ॥५६॥
अर्द्धयोजनमात्रे च पथश्शेषे स्थितेऽपि च ।
अस्तमभ्यगमत्सूर्यो दिशश्च तिमिरावृताः ॥५७॥
पितुः पार्श्वगताऽप्येषा वेपतेस्माधिकं भिया ।
सङ्घीभूतास्ततश्चोरा स्तयोरन्तिकमागताः ॥५८॥
तान् दृष्ट्वा सुमुखी सद्यो न्यपतन्मूर्च्छिता भुवि ।
स्वहस्तास्थितदंडेन भारद्वाजोऽपि तान् क्रुधा ॥५९॥
यदा जघान ते सद्यः खड्गैः कुन्तैर्हुलैरपि ।
आहत्य तं व्यसुं कृत्वा सुमुखी माक्रमंस्ततः ॥६०॥
सुमुखी पितरं दृष्ट्वा हतं चोरांश्च सङ्गतान् ।
चुक्रोश बहुधाऽप्युच्चै रुरोद पतिता भुवि ॥६१॥
स्मृत्वा निजं चाविनयं भर्तृद्रोहं च दुःखिता ।
तानब्रवीन्महाभागास्सर्वान् व श्शिरसा नमे * ॥६२॥
मा मां घ्नत शरीरं मे न यूयं स्प्रष्टुमर्हथ ।
अहं तु सर्वाभरणा न्यामुच्य प्रददामि वः ॥६३॥
इत्युक्ते तैरनुमते यदा सा भूषणावलिम् ।
अवमोक्तुं समारेभे तदा सर्वेऽपि शुश्रुवुः ॥६४॥

---

* आत्मनेपदमार्षम् ॥

आगच्छतः खुररवं वाजिनः कस्यचित् प्रभोः ।
तावत्ते भीतितश्चोरा आदाय सुमुखीं द्रुताः ॥६५॥

विक्रोशन्तीं शपन्तीं च तीरमंबुनिधेर्गताः ।
तावत् सा मूर्च्छिता बाला नात्मानं नापि वा जगत् ॥

जज्ञे मृतामिव च तां भूमौ विन्यस्य चोरकाः ।
हृत्वाऽऽभरणजालानि निश्शेषाणि त्वरान्विताः ॥६७॥

क्षिप्त्वा तां च पयोराशौ यथेष्टं प्रययुस्ततः ।
अनीक्षमाणा शरणं प्लवन्ती सा च सागरे ॥६८॥

पिबन्ती तोयधेस्तोयं मज्जनोन्मज्जनादिभिः ।
यदृच्छयाऽऽगतं काष्ठमालंब्य जलधौ प्लुतम् ॥६९॥

तरङ्गवाताहतिभिर्भ्राम्यमाणाऽभ्रमन्मुहुः ।
द्वीपं कञ्चिदनुप्रापद्दैवात् परमदुःखिता ॥७०॥

चिरं समुद्रप्लवनात् क्षुधा च परिपीडिता ।
रुदती स्वमनुस्मृत्य भर्तृद्रोहोद्यमं सती ॥७१॥

तीरे निविविशे सिन्धोः पदाच्चलितुमक्षमा ।
सूर्योऽप्युदयमापेदे द्रष्टुं तस्या इव स्थितिम् ॥७२॥

स्नानाय‌ागान्महावृद्धस्तत्र कश्चिन्महामुनिः ।
तां दृष्ट्वा पतितां तत्र मुनिर्विद्युल्लतोपमाम् ॥७३॥

काऽसि त्वमिति पप्रच्छ कारुण्यार्द्रितमानसः ।
सा चोत्थाय शनैर्वीक्ष्य तं प्रणम्य सुदुःखिता ॥७४॥

आचचक्षे स्ववृत्तान्तं संग्रहेण तपस्विने ।

सच ध्यात्वा मुहूर्तं तु क्रोधकारुण्ययन्त्रितः ॥७५॥

उवाच सुभगे भर्तुर्द्रोहस्येदं फलं तव ।
विधिना शिक्षिताऽसि त्वं सानुकंपोऽस्म्यतस्त्वयि ॥

एह्याश्रमं मम सुखं कञ्चित्कालं वसात्र च ।
पुष्णामि त्वां यथाशक्ति काले भर्तारमाप्स्यसि ॥७७॥

इत्युक्त्वा समुनिः स्नात्वा तां निनाय स्वमाश्रमम् ।
रक्ष्यमाणा च पुत्रीव साऽपि भर्तृपदस्मृतिः ॥७८॥

प्रयता नियताऽऽहारा तत्राश्रमपदेऽवसत् ।
धर्मशीलस्तु संप्रेष्य भार्यां पितृगृहं प्रति ॥७९॥

सेहे कालं मासमात्रं ततः खिन्नो विना तया ।
आप्तं संप्रेषयामास श्वशुरं प्रति पूरुषम् ॥८०॥

भारद्वाजस्य भार्याद्याः प्रोचुस्तं पुरुषं प्रति ।
जामातुस्सदनं प्राप्तो नाऽद्याऽपि विनिवृत्तवान् ॥८१॥

एतच्छ्रुत्वा धर्मशीलः पुरुषस्य मुखात्ततः ।
चिन्तां बहुविधां कृत्वा तयोरन्वेषणोद्यतः ॥८२॥

अटित्वा सुबहून् देशान् ग्रामाणि * नगराणि च ।
क्रमेण दण्डकारण्यं प्राप पापविवर्जितः ॥८३॥

तत्राऽपि बहुशो विप्रस्सञ्चरंस्तत्र तत्र च ।
आश्रमं मुनिवर्यस्य सुतीक्ष्णस्यागमत् क्रमात् ॥८४॥

तत्रास्य रचितं सम्यगातिथ्यं मुनिशिष्यकैः ।

---

* आर्षं नपुंसकलिङ्गम् ॥

विश्रम्य याममात्रं स सुतीक्ष्णं वाक्यमब्रवीत् ॥८५॥

धर्मशीलः—

भगवन् धर्मशीलाख्यो विप्रोऽहं कान्यकुब्जगः।
मम भार्या समं पित्रा गता पितृगृहं प्रति ॥८६॥

तस्य ग्रामो मम पुरात् पञ्चयोजनदूरतः ।
मासमात्रे गते कालेऽप्यागतौ नच तौ पुनः ॥८७॥

ततोऽहं चिन्तयाऽऽक्रान्तः प्रैरयं श्वशुरं प्रति ।
क्रमप्याप्ततरं बृत्तमधिगन्तुं विशेषतः ॥८८॥

विज्ञाय तौ द्वावपि न तत्रागातामिति प्रभो ।
ततोऽहं सुबहून् देशा नन्विष्यंस्तावुभावगाम् ॥८९॥

क्रमेणात्रागमं साधो परिश्रान्तोऽस्मि सर्वथा ।
इतःपरं नशक्नोमि चलितुं हि पदात्पदम् ॥९०॥

सर्वज्ञस्त्वं मुनिश्रेष्ठ वेत्सि नूनं तयोर्गतिम् ।
आज्ञापय यथेष्टं मां यत्कर्तव्यं मया भवेत् ॥९१॥

यथा तयोर्मया सार्धं भवेदेव समागमः ।

सुतीक्ष्णः—

माभैषीर्भूसुरश्रेष्ठ ज्ञानतोऽज्ञानतोऽपिवा ॥९२॥

स्वेनानुभवनीयं स्यात् स्वकृतं सर्वमेव हि ।
पूर्वजन्मनि विप्रोऽभूस्तदा ते दुष्कृतं महत् ॥९३॥

पितृष्वसुस्सुतां भर्तुर्गृहं गन्तुं कृतत्वराम् ।
निषिद्ध्य गृहमानीय तां त्वं स्वार्थे न्यवेशयः ॥९४॥

तस्या भूषणजालानि बलात्सर्वाण्यपाहरः ।
तस्योदर्कः कर्मणोऽद्य त्वयाऽयमनुभूयते ॥९५॥
किं कर्तव्यं नदुःखान्तो जन्मन्यस्मिन् हि विद्यते ।

धर्मशीलः—

भगवन् ब्रह्महत्यादेरपि पापस्य निष्कृतिः ॥९६॥
भवादृशैः परिप्रोक्ता जगदुद्धरणेच्छुभिः ।
तथाहि सति पापस्य मत्कृतस्यापि निष्कृतिः ॥९७॥
कथं नशक्यतां वक्तुं भवता सर्वशक्तिना ।
शरणागतमेनं त्वं कृपया रक्ष पावन ॥९८॥
पश्चात्तप्तोऽस्मि सत्येन पुरतस्ते ब्रवीम्यहम् ।

अगस्त्यः—

एतच्छ्रुत्वा वचस्तस्य सुतीक्ष्णो मुनिसत्तमः ॥९९॥
क्षणं ध्यात्वा प्रसन्नात्मा धर्मशीलमथाब्रवीत् ।

सुतीक्ष्णः—

वक्ष्यामि शृणु विप्रेन्द्र रहस्यमतिपावनम् ॥१००॥
धर्मसंस्थापनार्थाय रावणस्य वधाय च ।
विष्णुः स्वार्धांशतो जज्ञे रामो दशरथात्मजः ॥१०१॥
लक्ष्मणो भरतशत्रुघ्नौ * जाता अर्धांशभागतः ।
विष्णोर्वक्षःस्थलस्थाना लक्ष्मीर्भर्त्रानुगुण्यतः ॥१०२॥
जाताऽर्धांशेन सीतेति जनकस्याद्धुरावनेः ।

---

* अक्षराधिक्यमार्षम् ॥

अन्यार्धांशेन कलया ऊर्मिळा जनकौरसी ॥१०३॥

माण्डवी श्रुतकीर्तिश्च कुशध्वजसुते उभे ।
जाताः पत्न्योऽभवंस्तेषां धर्मान् शिक्षयितुं स्त्रियाः ॥

तासु सीता परा शक्तिः परब्रह्मस्वरूपिणी ।
प्रतिष्ठा रामचंद्रस्य सर्वधर्मप्रवर्तिका ॥१०५॥

मूलप्रकृतिरेषाऽभूत् जगत्सृष्टौ पुरेशितुः ।
श्रीरामस्य स्वपादाब्जनतेभ्यश्श्रेयसोऽर्पणे ॥१०६॥

एषैव हेतुर्नैषा चेत् किं कुर्यान्निर्गुणः पुमान् ।
सकृन्नमस्कृता ह्येषा प्रारब्धाद्यंहसां त्रिकम् ॥१०७॥

सद्यो नाशयते नृणां वर्धयेच्च श्रियं गृहे ।
विश्लिष्टान् योजयेद्बन्धून् नष्टं प्रापयते पुनः ॥१०८॥

विद्याश्चतुर्दशाधत्ते ब्रह्मज्ञानं च यच्छति ।
स्मृताऽपि पापमाहन्ति पूजिता भक्तितस्सुमैः ॥१०९॥

ब्रह्मलोकान्तलोकेषु दत्ते सा कामचारणम् ।
तया सहैव संपूज्यः श्रीरामः करुणानिधिः ॥११०॥

तदा सा गुणभूता सत्यर्पये दीप्सितं नृणाम् ।
पृथगेषाऽपि संपूज्या सर्वश्रेयोऽभिवृद्धये ॥१११॥

तस्मात् त्वं स्वगृहं गत्वा शक्त्या पूजय जानकीम् ।
सा प्रसन्ना वरान् दद्यात् पत्न्या ते सङ्गमो भवेत् ॥

अगस्त्यः—

इति वाचं सुतीक्ष्णस्य श्रुत्वा स द्विजसत्तमः ।

शिरस्यञ्जलिमाधाय प्रणिपत्येदमब्रवीत् ॥११३॥

धर्मशीलः—

नमस्तेऽस्तु मुनिश्रेष्ठ नमस्ते दीनवत्सल ।
वचसैव तवानेन शोको मम विनाशितः ॥११४॥

श्रुतं मया मुनिश्रेष्ठात् कस्माच्चित्गृहमागतात् ।
साक्षाद्विष्णुः स्वयं रामः सीता लक्ष्मीरिति स्फुटम् ॥

किन्तु तन्महिमाऽद्यैव तव वक्त्रांबुजाच्छ्रुतः ।
धन्योऽस्मि कृतकृत्योऽस्मि शिष्योऽस्मि भवतस्सदा ॥

कदा कथंवा सा पूज्या विधानेनापि केन वा ।
सर्वं मे शंस भगवन् मां कृतार्थय सर्वथा ॥११७॥

सुतीक्ष्णः—

वैशाखोत्तरफल्गुन्यां जानकीपूजनं कृतम् ।
सूते यत्तत्फलं वक्तुं सैव जानाति जानकी ॥११८॥

अन्येष्वखिलमासेषु पूजनं सर्वसिद्धिदम् ।
ऋक्षे चोत्तरफल्गुन्यां किन्तु तत् बहुपुण्यतः ॥११९॥

यस्मिन्दिने तु मद्ध्याह्नं व्याप्नोत्युत्तरफल्गुनी ।
तद्दिनं तु प्रशस्तं स्यात् सीतापूजनकर्मणि ॥१२०॥

दिनद्वयेऽपि व्याप्तिश्चेत् ग्राह्या स्यादधिका यदा ।
पूर्वविद्धा प्रशस्ता स्याद्यदि व्याप्तिस्समा द्वयोः ॥१२१॥

अतर्कितोपेतविपद्व्यपनोदाय मानवैः ।
भृगुवारे पूजनीया नचेदृक्षं समीपगम् ॥१२२॥

एकाग्रमानसैर्भक्त्या पूज्यते मैथिली यदि ।
आत्मानं दर्शयित्वा सा वरानिष्टान् प्रयच्छति ॥१२३॥

साकं स्वभर्त्रा सेदानी मयोद्धया मधितिष्ठति ।
भुञ्जाना मानुषान् भोगान् सर्वकामसमृद्धिनी ॥१२४॥

तथाऽपि स्वाश्रितान् भक्ता ननुगृह्णाति सर्वथा ।
पतिपार्श्वस्थिताऽप्येषा पूजास्थानेषु वर्तते ॥१२५॥

गृहमद्धयाङ्गणे पूजामण्टपं कारयेद्बुधः ।
कदळीनाळिकेरादिफलबृन्दैश्च शोभितम् ॥१२६॥

तथा पट्टवितानाढयं मध्ये वेदिकया युतम् ।
तत्र सिंहासने दिव्ये तण्डुलान् प्रस्थसंमितान् ॥१२७॥

न्यस्य पद्मं लिखित्वाऽत्र कुंभं रजतनिर्मितम् ।
मुक्तामणिभिरापूर्य तण्डुलैर्वाऽत्र निक्षिपेत् ॥१२८॥

हरिद्राक्तं नाळिकेरं तत्रोदक्छिखमर्पयेत् ।
तत्र सीताप्रतिकृतिं काञ्चनीं वाऽपि राजतीम् ॥१२९॥

यद्वा दर्भमयीं वाऽपि न्यस्य प्राणप्रतिष्ठया ।
तत्र सीतां समावाह्य पूजयेच्च यथाविधि ॥१३०॥

रक्तपुष्पाणि वर्ज्यानि रक्तचन्दनमेव च ।
पायसाऽपूपदध्यन्नगुडान्नादि निवेदयेत् ॥१३१॥

अथ पूजाविधिः ॥

आदौ— जानकीं पूजयिष्यामि तत्सान्निध्यं भविष्यति ।
यत्नतो वह शेष त्वं तत्रापि सुकृतं भवेत् ॥ शेषाय नमः

[ पीठाधस्स्थले भूमौ ] सर्वदिक्षु व्याप्तिमतीं अर्चयिष्यामि जानकीम् । अपसर्पत तद्यूयं नमोवोऽस्तु च दिग्गजाः ॥ ऐरावताय नमः इत्याद्यष्टासु दिक्षु * अष्टापि दिग्गजान् पूजयेत् । ब्रह्मादिलोकपाला वः करोमि नमसां शतम् । वीक्षद्ध्वं खे सन्निहिताः सीतापूजां मया कृताम् (ऊर्द्ध्वं) ब्रह्मादिभ्यो लोकपालेभ्यो नमः । अथ ध्यानम्--सिंहासनसमारूढां शुक्लचन्दनचर्चिताम् । किरीटाङ्गदकेयूरकटकादिविभूषणैः ॥ भूषितामखिलैर्मन्दस्मिताश्चितमुखाम्बुजाम् । ऊर्मिळाकरपाथोजधृतश्वेतातपत्रकाम् ॥ माण्डवीश्रुतकीर्तिभ्यां वीज्यमानप्रकीर्णकाम्। वनदेवतया चापि विजयाभिधया पुरः ॥ स्थितया रचिताञ्जल्या विनयेनोपसेविताम् । राजराजेश्वरीं देवीं ध्यायामि जनकात्मजाम् ॥ इति ध्यानम् ॥ आवाहये त्वां पूजार्थं जनकेश्वरपुत्रिके। भर्तृपार्श्वगताऽपि त्व मत्र सन्निहिता भव ॥ अस्यां प्रतिमायां सर्वलोकमातरं सर्वचराचरात्मिकां साङ्गां सपरिवारां सीतामावाहयामि ॥ (मध्ये) ऊर्मिळां पृष्ठे आवाहयामि । दक्षिणतो माण्डवीं, वामतः श्रुतकीर्तिं, पुरतस्सीताभिमुखीं सविनयाञ्जलिबन्धां विजयामावाहयामि । ( इतःपरं प्रत्युपचारं साङ्गायै सपरिवारायै सीतायै नमः इति पठनीयम् ) सार्वभौमप्रिये मातः नानारत्नविचित्रितम् । आसनं फणिभिर्दिव्यैः धृतमध्यास्यतां त्वया ॥ आसनम् ॥ सुवर्णपात्रे निक्षिप्तमानीतं सरयूजलम् । मम पावनताहेतोः कुरु पादावनेजनम् ॥ पाद्यम् ॥

---

* ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ।
पुष्पदन्तस्सार्वभौमस्सुप्रतीकश्च दिग्गजाः ॥

रविमण्डलमद्धयस्थहिरण्मयवपुःप्रिये । अर्घ्यं ददामि ते मातर्मल्लिकावासितं जलम् ॥ अर्घ्यम् ॥ मद्दत्तजलबिन्दुस्ते कुक्षिं गच्छति चेत्तदा । तापत्रयं विनश्येन्मे तस्मादाचमनं कुरु ॥ आचमनीयम् ॥ शर्करागोघृतक्षौद्र दुग्धनानाफलैर्युतम् । पञ्चामृतं मया दत्तं तेन स्नाहि शुभाय मे ॥ पञ्चामृतस्नानम् ॥ कामधेनूद्भवैर्दुग्धैः स्नापिताऽसि सुरैर्मुहुः । अलज्जं स्नापये सीते पयोभिर्मम गोभवैः ॥ क्षीराभिषेकम् ॥ सरयूयमुनागङ्गागौतमीसह्यजादितः । नीताभिर्मन्त्रपूताभिरद्भिः स्नाहि महीसुते ॥ शुद्धोदकस्नानम् ॥ (अस्मिन्नवसरे श्रीसूक्तं, भूसूक्तं, 'उद्धन्यमानमस्याअमेद्धयं' इत्यनुवाकः, बृहत्साम बृहद्रथन्तरसाम शुद्धसामानि, सुन्दरकाण्डस्थ हनुमत्कृत सीतादर्शन (१५) सर्गश्च पठनीयानीति मुनीनां संप्रदायः) वनवासेऽपि वासांसि दत्तानि श्वशुरेण ते । मत्पूजासमये मातः वस्व चीनांशुकं मम ॥ वस्त्रम् ॥ तव कञ्चुलिकां रत्नखचितां मातरर्पये । पापकञ्चुकनिर्मोक्षं फलं मे देहि जानकि ॥ कञ्चुकम् ॥ अनसूयाङ्गरागेण वासितेऽम्ब तवाङ्गके । कर्पूरवासितं लिम्प सितं मलयजद्रवम् ॥ चन्दनम् ॥ कस्तूरीतिलकं फाले कुरु मैथिलि मत्कृते । सकळङ्केन्दुशोभां ते तेन धत्तां मुखाम्बुजम् ॥ कस्तूरीतिलकम् ॥ मातर्ललाटे काश्मीरजातकुङ्कुमपङ्कतः । सीमन्ते च श्रियै देवि तिलकं कारयामि ते ॥ कुङ्कुमतिलकम् ॥ भूपालदुहिताऽसि त्वं महिषी चक्रवर्तिनः । धृत्वा विभाहि मद्दत्तहारकुण्डलकङ्कणम् ॥ आभरणानि ॥ अक्षतान् कुङ्कुमोन्मिश्रान् शिक्षिताशरनायके । सिन्दूराञ्चितसीमन्तमध्ये तेऽम्ब निवेशये ॥

अक्षतान् ॥ मालतीमाधवीमल्ली केतकीजातिपङ्कजैः। पूजये पुरुहूतादिपूज्यां त्वां पृथिवीसुते ॥ पुष्पाणि समर्पयामि ॥

अथाङ्गपूजा—

पाकशासनपूजितायै नमः पादौ पूजयामि। पार्थिवव्यञ्जनान्वितायै नमः पादरेखाः पू। पल्लवमृदुपदायै नमः पादतलं पू। प्रणतहार्दतमोऽपहायै नमः पादनखान् पू। गुणीकृतालयायै नमः गुल्फौ पू। गङ्गाप्रसादनपरायै नमः जङ्घायुगळं पू। आजानशुद्धचरितेड्यायै नमः जानुनी पू। उरुविक्रमपतिनन्दितायै नमः ऊरू। घटिताशरपतिमृत्यवे नमः कटिं पू। आकाशमध्यायै नमः मध्यं पू। खलारातिभयङ्कर्यै नमः मध्यविद्योतमानमेखलादाम पू। किङ्करीकृतपङ्कजासनायै नमः मेखलास्थितकिङ्किणीजालकं पू। ब्रह्माण्डकोटिनिलयोदरायै नमः उदरं पू। पद्मनाभप्रियसख्यै नमः नाभिं पू। रामार्पितहृदयायै नमः रोमावळिं पू। अश्वस्तनिकमुनिमोक्षदायै नमः स्तनौ पू। कण्ठालंबितखरारातये नमः बाहू पू। जटायुर्जीवितप्रदायै नमः करतले पू। आर्ताभयदानपरायै नमः अभयमुद्रां पू। दासीकृतकपिप्रवरायै नमः वरमुद्रां पू। पद्मगन्धिन्यै नमः करस्थित पद्मं पू। रक्षःप्राणापहारहेतवे नमः हारावळिं पू। अमङ्गळकलिदोषध्वंसिन्यै नमः मङ्गळसूत्रं पू। कण्ठजितकोकिलायै नमः कण्ठं पू। मुखविजितचन्द्रायै नमः मुखं पू। श्रितजनापसारितकृतान्तायै नमः दन्तान् पू। शिष्टौघसन्नुतायै नमः ओष्ठौ पू। भक्तजनहृदयकृतवासायै नमः नासां पूजयामि। कवितारसपानासक्तायै नमः नासामौक्तिकं पू

श्रीरामचुंबितमुख्यै नमः कपोलौ पू । नित्यसुवासिन्यै नमः ताटङ्के पू । मुक्तावलीपूजितायै नमः मुक्तामयवाळिकां पू । त्रिभुवननेत्रैय नमः नेत्रे पू । अपांगभोंषितायै नमः अपाङ्गौ पू । वशीकृतनाथहृदयायै नमः कटाक्षान् पू । शिवचापारोपणपणायै नमः भ्रूचापौ पू । विश्राणितसर्वकर्मफलायै नमः फालं पू । जनककुलतिलकभूतायै नमः कुङ्कुमतिलकं पू । दशशिरश्शिरःकर्तनप्रियायै नमः शिरः पू । पुष्पकारूढायै नमः चिकुरस्थितपुष्पाणि पू । वाणीपतिवन्दितायै नमः वेणीं पू । करीन्द्रकरसक्थये नमः किरीटं पू । आलिङ्गितवीररामायै नमः अभ्रस्थितविद्युल्लतोपमकान्तिं पू । पालितपरमापराधिकायै नमः कृपालहरीं पू । हनूमतोरक्षितराक्षसीकायै नमः दीनशरण्यतां पू । तृणान्तरितरावणायै नमः पातिव्रत्यधर्मं पू । अनभ्युपगतहनुमत्स्पर्शायै नमः भर्तृभक्तिं पू । जन्मान्तरकृतपापानुवादिन्यै नमः मानुषभावानुवर्तनं पू । दुःखेऽपि शुचिस्मितायै नमः नित्यप्रसन्नतां पू । परुषवचोधिक्कृतलक्ष्मणायै नमः देवकार्यधुरन्धरतां पू । कृतरावणहितोपदेशायै नमः शत्रोरपि हितपरतां पू । गर्वरहितायै नमः सर्वाण्यङ्गानि सर्वांश्च गुणान् पू । कमलासनप्रसुवे नमः कमलानि समर्पयामि । कुवलयाधिपवल्लभायै नमः कुवलयानि स । हेमवल्लीसमाङ्गकायै नमः मल्लीकुसुमानि सम । ख्यातिविलसितायै नमः जातिपुष्पाणि सम । श्रितकंपहरायै नमः चंपकमालां सम । पल्लवकोमळपादायै नमः बिल्वपत्राणि सम । अतुलप्रभावायै नमः तुळसीमञ्जरीरर्पयामि । पर्वामृतांशुवदनायै नमः सर्वाणि पुष्पाणि समर्पयामि । अथ

धूपदीपादयो नीराजनान्ता उपचाराः स्त्रीभिस्तूष्णीं पुंभिस्तत्त-न्मन्त्रैश्च कर्तव्याः । उत्थितामग्निमध्यात् त्वां पुष्पवर्षैर्मुदा सुराः । आनर्चुरहमप्यद्य मन्त्रपुष्पं ददामि ते ।। मन्त्रपुष्पम् । मातः प्रदक्षिणीकुर्वे त्वामद्य जनकात्मजे । मम प्रदक्षिणं सर्वमा-युस्सत्वं बलं कुरु ।। प्रदक्षिणानि ।। प्रणिपातप्रसन्नेति त्वमागस्य-पि घुष्यसे । नित्यं शतापराधोऽहं वन्देऽम्ब त्वां प्रसादयन् ।। करुणाकरचित्तायै कल्याणनिधये नमः । काकुत्स्थवल्लभायै ते कमलायै नमो नमः ।। नमस्कारान् ।। विस्मृत्य मातरमपि त्वामेव विचराम्यहम् । श्रुतिं स्मृतिं च जानानोऽप्यकार्ये सततं रमे ।। काकं तं रक्षितवतीं त्वामेव शरणं श्रये । मद्रक्षा ते भरो मातर्नोच्यतेऽतः परं मया ।। देहं वाऽऽदेहमखिलं सुखं यत् कांक्षितं मम । स्वं पदं प्रापयान्ते मां नमस्ते जगदंबिके ।। इत्यपराधक्षमापणम् । चक्रवर्तिप्रिये छत्रं चन्द्रमण्डलसन्निभम् । धारये ते सर्वरत्नजालकं सुखमास्यताम् ।। छत्रम् ।। स्वर्णपुङ्खं शुभ्रवर्णं चामरद्वयमादरात् । धुनोमि त्वामुभयतः प्रसीद परमेश्वरि ।। चामरयुग्मम् । आरोहांब मया दत्तां शिबिकां रत्नभूषिताम् । अहं मदीयसहितो वहाम्येनां यथासुखम् ।। शिबिकाम् ।। ऊर्मिळाऽऽद्यैः स्वीयजनैस्सेव्यमानाऽद्य सर्वतः । आन्दोळिकां ममेमां त्व मातिष्ठ कृपया मयि ।। आन्दोळिकाम् ।। किन्नर्यो रक्तकण्ठ्यस्ते गायन्ति चरितं सदा । गायामि रामं प्रति ते मधुरं धर्मकीर्तनम् । (आरण्यकाण्डे नवमस्सर्गः । ) गीतम् ।। दृष्टवत्याऽपि मे * मातारंभादिनटनं त्वया । मदीय-

---

* मातः इति पदच्छेदः ।

नर्तकीबृन्दनर्तनं वीक्ष्य हृष्यताम् ॥ नृत्तम् ॥ समस्तराजोपचा-रदेवोपचारपूजां समर्पयामि ॥ कारुण्यनिलये सीते काकुत्स्थ-प्रियवल्लभे । पूजान्तेऽद्य मया दत्तं क्षीरार्घ्यं संगृहाण भोः ॥ क्षीरार्घ्यप्रदानम् ॥ अथोपायनदानम् ॥ अथ सभर्तृकाभ्यः स्त्रीभ्यो हरिद्राकुङ्कुमचन्दनपुष्पवस्त्रकञ्चुकादिस्त्रीद्रव्याणि स्त्री-भिरेव दापयेत् ॥ अपूजिताऽपि रक्षःस्त्रीबृन्दाय करुणामधाः । कृताऽप्यविधिना पूजा यथावद्विहिताऽस्तु ते ॥ अनया पूजया जानकी प्रीयताम् ॥

इति पूजाक्रमः ॥

सुतीक्ष्णः—

इति विप्रोत्तराथां त्वं फल्गुन्यां परदेवताम् ।
आराधय युतः श्रद्धाभक्तिभ्यां विभवेन ते ॥१॥

स्वयमेष्यति पत्नी त्वां नष्टैराभरणैस्सह ।
दिव्यसिंहासनासीनां भगिनीभिश्च सेविताम् ॥२॥

ध्यायन् धिया रघूत्तंसप्राणनाथां व्रजाधुना ।

अगस्त्यः—

इत्येवमुपदिष्टस्स मुनीन्द्रेणेन्द्रकर्मणा ॥३॥

गृहमेत्य च संपाद्य द्रव्याण्यावश्यिकान्यथ ।
ऋक्षे चोत्तरफल्गुन्यां भक्तिश्रद्धायुतोद्विजः ॥४॥

सुतीक्ष्णं भावयन् बुद्ध्या गुरुवर्यं प्रणम्य तम् ।
आराधयामास जगज्जननीं बहुविस्तरैः ॥५॥

ब्राह्मणान् भोजयामास सुबहून् षड्रसान्नतः ।
रात्रौ च देवीं संपूज्य विसृज्य च यथाविधि ॥६॥

कुंभस्थान् तण्डुलान् विप्रः कुंभेन सह दत्तवान् ।
कस्यै चित्तु सुवासिन्यै सीतेयमिति भावयन् ॥७॥

मङ्गळद्रव्यजातं च ददौ पूर्वोक्तरीतितः ।
पट्टचेलं स्वर्णतन्तुस्यूतां चोळीं च दत्तवान् ॥८॥

क्षीरमात्राहारवान् स यामे रात्रौ द्वितीयके ।
श्रीसूक्तेन बृहत्साम्ना राजनेनापि सामतः ॥९॥

अन्यैश्च लौकिकैर्गानैरुर्वीपुत्रीमतोषयत् ।
अथ तृतीययामादौ सुष्वाप स्थण्डिले व्रती ॥१०॥

प्राप्ते चतुर्थयामे तु सीता सर्वाङ्गसुन्दरी ।
तद्दत्तकञ्चुळीवस्त्रभासमानाङ्गका स्वयम् ॥११॥

किरीटकटकाद्यैश्च मञ्जीरान्तैर्विभूषणैः ।
शोभिता दर्शयित्वा स्वं विप्रं स्वप्नेऽब्रवीद्वचः ॥१२॥

देवी—

धर्मशील प्रसन्नाऽस्मि वांछितं वृणु मे वरम् ।
मत्पूजोत्तरफल्गुन्यां न जातु विफलीभवेत् ॥१३॥

ब्राह्मणः—

जगदंब नमस्तुभ्यं जनकस्याद्भुते सुते ।
मम प्रनष्टा दयिता न तद्वार्ताऽपि श्रूयते ॥१४॥

सा चेदभग्नचारित्रा मां प्राप्नोतु सुदुर्भगा ।

यथा गता तथाऽऽयातु सर्वाभरणभूषिता ॥१५॥
वरमन्यं वृणोमीशे प्रसन्नां त्वां निरीक्ष्य वै ।
मम वंशाभिवृद्ध्यर्थं पुत्रो मे जायतां शुभः ॥१६॥
त्वत्पादपद्मयोर्भक्तिर्नित्या स्यान्मे तवाज्ञया ।

देवी—

पत्नीमभग्नचारित्रां लप्स्यसे श्वः प्रभातके ॥१७॥
भूषणानि च सर्वाणि तदीयानि च लप्स्यसे ।
पुनश्चोत्तरफल्गुन्यां प्रतिमासं च मां यज ॥१८॥
मासेषु द्वादशस्वेवं ततः पुत्रं च लप्स्यसे ।

अगस्त्यः—

इत्युक्त्वाऽन्तर्दधे देवी प्रबुबोध च स द्विजः ॥१९॥
किमेतदिति सञ्चिन्त्य विस्मयोत्फुल्ललोचनः ।
अथाशयित्वा चोत्थाय नित्यकर्माण्यकारयत् ॥२०॥
स्मरन् स्वप्नं वरं देव्याः प्रत्यैक्षत निजां सतीम् ।
आद्ययामावसानेऽथ विमानवरमास्थितौ ॥२१॥
गन्धर्वदंपती कौचित् सुमुख्या सार्धमागतौ ।
प्रणतायाथ विप्राय तावब्रूतां प्रियं वचः ॥२२॥

गन्धर्वौ—

विप्रवर्य शृणु कथां तव भार्याश्रितां शुभाम् ।
आवां गतौ सिन्धुतीर मद्य प्रातर्यदृच्छया ॥२३॥
द्वीपे सान्तानिके रम्ये मुनीनामाश्रमान्तिके ।

आवां मनुष्यगन्धर्वौ व्यचराव मदोत्कटौ ॥२४॥
इयं तत्राभवद्दृश्या मूले वृक्षस्य कस्यचित् ।
अञ्जलिस्थैरविं पुष्पैरर्चन्ती मलिना कृशा ॥२५॥
अश्रुसंपूर्णनयना काङ्क्षन्ती भर्तृसङ्गमम् ।
काऽसीति पृष्टा प्राहस्म वाचा गद्गदयाऽथ नौ ॥२६॥
कान्यकुब्जे धर्मशीलाभिधविप्रोत्तमस्य च ।
अहं तु सदृशी भार्या तत्रासं तेन वै सुखम् ॥२७॥
कदाचिन्मत्पिताऽयाचन्मामेत्य द्रविणं बहु ।
धनं नेति ततोऽयाचद्भूषणं बहुमूल्यकम् ॥२८॥
स्त्रीस्वभावेन तद्दातुं मयाऽपि ह्यन्वमन्यत ।
तदर्थं सह पित्राऽहमनुज्ञाप्य पतिं बलात् ॥२९॥
अगमं पितृगेहाय मार्गमध्येऽथ चोरकैः ।
हतः पिता मे भूषाश्च सर्वा अपहृता मम ॥३०॥
समुद्रमध्ये क्षिप्ता चाप्यहं तत्रतु दुःखिता ।
मज्जनोन्मज्जनपरा काष्ठं किञ्चिदुपागमम् ॥३१॥
यदृच्छया वायुनाऽथ द्वीपमेतमवापिता ।
उत्तीर्य कथमप्यब्धे रुद्राक्षं मुनिमेककम् ॥३२॥
स मां विनिन्द्य बहुशः पतिद्रोहफलं त्विति ।
अन्ते मामाह भर्तारं प्राप्स्यसीह वसाश्रमे ॥३३॥
इत्युक्त्वाऽत्र फलाहाराऽऽराधयामि दिवाकरम् ।
इति श्रुत्वा वचस्तस्या अश्रुगद्गदभाषितम् ॥३४॥

अवादिष्व मुनिं प्राप्य किं सत्यमिदमित्यथ ।
तथेत्युक्त्वाऽऽदिशत्सोऽपि 'तामिमां भर्तृसन्निधिम् ॥

शीघ्रं प्रापयतं नस्याद्वियोगोवां कदाचन ।'
इत्याज्ञां मुनिवर्यस्य प्राप्य चादाय तामिमाम् ॥३६॥

विमानेनागतौ व्योम्ना तवेदं नगरं प्रति ।
मद्ध्येऽप्यशृणुव क्षित्यां तारं कञ्चन शब्दकम् ॥३७॥

कतमो गच्छति व्योम्ना परीपालय मां प्रभो ।
इहैहि कृपया स्वामिन् धर्मस्ते भविता महान् ॥३८॥

विलापमित्थं करुणं श्रुत्वाऽऽवां धरणीं गतौ ।
अपश्याव स्त्रियं काञ्चि द्विस्फुरन्तीं वयोऽधिकाम् ॥

काऽसि वृद्धे किमर्थं नावाहूताऽसीति पृष्टया ।
तया विमृज्य बाष्पांबु वाक्यमेतदकथ्यत ॥४०॥

नमो वो देवता भाथ शृणुताऽऽसाकदुस्थितिम् ।
शबराणां कुले जाता नाम्नाऽहं कलहप्रिया ॥४१॥

अष्टौ मम सुतास्सन्ति भ्रातरो दश पञ्च च ।
मृगान् हत्वाऽभ्यवहरन्ति * सर्वे ते चौर्यवृत्तयः ॥४२॥

एकदा भूसुरः कश्चित् तत्पुत्र्या साकमेकया ।
पथिकावागतौ सा तु बह्वाभरणभूषिता ॥४३॥

मदीयास्तं द्विजं हत्वा तांच प्रक्षिप्य वारिधौ ।
आहृत्य सर्वाभरणान्याययुर्मे गृहं प्रति ॥४४॥

---

* अक्षराधिक्यमार्षम् ॥

पुनरन्यत्र चौर्यार्थं गत्वाऽऽहृत्य धनं बहु ।
ह्यःप्रातरागतास्सर्वे सुप्ता आसायमेव च ॥४५॥

अत्राऽस्ति निकटे काळी सा ह्यस्मत्कुलदेवता ।
रात्रावुत्थाय तां नन्तुं पुण्ये तत्र भृगोर्दिने ॥४६॥

तद्भूषणेषु तेष्वेकं तस्यै दातुं यदृच्छया ।
यावदादत्त वै ज्येष्ठस्तावत्क्रोशन् हहा इति ॥४७॥

पपात भूमौ निरसु स्तद्वीक्ष्य किमिति ब्रुवन् ।
द्वितीयो जगृहे तच्च सोऽप्यपसत्तथैव च ॥४८॥

तृतीयोऽपि तथा कुर्वन् मूढः पतितवान् क्षितौ ।
तावदन्यान्निवार्याहं मृतान् वीक्ष्य महीगतान् ॥४९॥

काळीकृतमिति ज्ञात्वा तदालय मुपेयुषी ।
अरोदिषं ता मुद्दिश्य वागुवाचाशरीरिणी ॥५०॥

मद्भक्तस्य प्रियाभूषा अनर्हास्ता ममाखिलाः ।
असंशयं मरिष्यन्ति स्पृशेयुस्तां विना च ये ॥५१॥

श्वःकाल्ये यास्यति व्योम्ना कश्चिद्गन्धर्वसत्तमः ।
सा चैष्यति समं तेन तस्यै सर्वं प्रदापय ॥५२॥

सा भूषयित्वा सर्वाङ्गं यातु स्वरमणान्तिकम् ।
शेषास्तु त्वत्सुताः क्षेमं वर्तिष्यन्ते न संशयः ॥५३॥

सर्वेषा मन्यथा नाशो भविष्यति न संशयः ।
एतच्छ्रुत्वा दिव्यवाक्यं गृहमागत्य सत्वरा ॥५४॥

निवार्यान्यान् मत्तनयान् प्रतीक्षे त्वां खदर्शना ।

बुद्ध्याऽहमनुपश्यामि * एषा सा कालिकोदिता ॥५५॥
अंबाऽऽगच्छ गृहं मेऽद्य त्वद्भूषा धारयस्व च।
इति श्रुत्वाऽपि वृद्धाया वाचं नो § विश्वसित्यसौ ॥
आवामेनां ततो नीत्वा तद्गृहं भूषणान्यथ।
अग्राहयाव सर्वाणि सा ततोऽङ्गान्यलंकरोत् † ॥५७॥
स्मितास्यां सुमुखीं नत्वा प्रेषयामास साऽथ नः।
एवमेषा द्विजश्रेष्ठाऽऽनीता मुनिदराज्ञया ॥५८॥
प्रतीच्छ भार्यां गच्छाव इति तौ जग्मतुर्द्रुतम्।
धर्मशीलस्तु सन्तुष्टो ज्ञात्वा भार्याचिकीर्षितम् ॥५९॥
तामाह दैवमेव त्वा मशिक्षयदतः क्षमे।
अङ्गीकृत्येति तामुक्त्वा सीतायै प्राणमन्मुहुः ॥६०॥
सर्वदेवात्मिका सीता नूनं सा परदेवता।
अन्यथा सा कथं काळी स्वभक्तं मां वदेत् स्फुटम् ॥
इति सञ्चिन्त्य सीताया महिमानमवोचत।
तत्रागतेभ्यः पौरेभ्यस्ततो धर्मान् यथापुरम् ॥६२॥
भक्त्या समाचरद्धर्षान्नित्यं सीतां समर्चयन्।
देव्यादिष्टप्रकारेण यावद्वत्सरपूरणम् ॥६३॥
प्रतिमासं चोत्तरस्यां फल्गुन्यां जानकीव्रतम्।

---

* संहिताया अविवक्षितत्वात् सन्ध्यभावः।

§ भूतेऽपि लडार्षः।

† आगमशास्त्रस्यानित्यत्वादडागमाभावः।

पूर्वोक्तेन प्रकारेण धर्मशीलोऽचरन्मुदा ॥६४॥
अथ सा गर्भमाधत्त सुमुखी वत्सरे गते ।
सुषाव तनयं दिव्यं सीतादेवीप्रसादजम् ॥६५॥
धर्मशीलश्च सुमुखी हर्षांभोधौ ममज्जतुः ।
स कुमारस्तु विद्यावान् ह्रीमान् धीमान् वीनीतिमान् ॥
यौवने सदृशीं भार्यां पित्रा संपादितां शुभाम् ।
प्राप्य शुश्रूषया मातापितरौ बह्वतोषयत् ॥६७॥
काले गतेऽथ महति निवेश्य तनये गृहम् ।
वैकुण्ठं दंपती प्राप्तौ सीतारामप्रसादतः ॥६८॥

अगस्त्यः—

इदमाख्यानमव्यग्र इतिहासं पुरातनम् ।
पूजादिने पूर्वरात्रौ श्रुत्वा प्राप्नोत्यभीप्सितम् ॥६९॥
येच भक्तया भूमिपुत्र्याः शृण्वन्त्याख्यानमद्भुतम् ।
आदेहं च सुखं प्राप्य देहान्ते मुक्तिमाप्नुयुः ॥७०॥
प्रतिशुक्रदिनं श्रोतुः कथामेतां तु वत्सरम् ।
आत्मानं दर्शयेदादौ स्वप्ने वीटीलसन्मुखी ॥७१॥
ततः स्मृता सन्निदद्ध्यात् धर्मकामार्थवर्षिणी ।
एतत्ते कथितं सर्वं सीताया वैभवं महत् ॥७२॥
इतः परं तां मन्यस्व स्वतपःफलमूर्जितम् ।
ध्यायंस्तां मनसा वाचा वदस्व * परदेवताम् ॥७३॥

---

* भासनोपसंभाषेत्यादिना ज्ञाने तङ् ।

सीताषडक्षरजपाः सीताऽनुध्यानतत्पराः ।
भृगुवारेषु सीतायाः पूर्वोक्ताङ्गार्चने रताः ॥७४॥

सीतापदार्पितस्वार्था न मनुष्या मता मम ।

जनकः—

कुंभसंभव सर्वज्ञ नमस्तेऽस्तु पुनर्नमः ॥७५॥

वात्सल्याख्यं मलं तस्यां क्षालितं त्वद्वचोऽमृतैः ।
अहं च पूजयिष्यामि सीतां सर्वसमृद्धये ॥७६॥

मूलप्रकृतिरूपां तां मत्वा मुक्त्यर्थमाश्रये ।
इदं तु ज्ञातुमिच्छामि वद कारुण्यतो मयि ॥७७॥

सीताषडक्षरी कीदृग्ध्यानन्यासादिकं च किम् ।
कथं जपः प्रकर्तव्यो वद विस्तरतोऽधुना ॥७८॥

अगस्त्यः—

वक्ष्यामि शृणु राजेन्द्र मन्त्रं सर्वार्थसिद्धिदम् ।
विना येन भवेत्पूजा सीतायाः स्वल्पसिद्धिदा ॥७९॥

(1) लक्ष्मीबीजं वदेदादौ सीतां ङेऽन्तं (2) ततो वदेत् ।
ततो वदेद्वह्निजायां (3) षड्वर्णो मन्त्र ईरितः ॥८०॥

त्वमेवर्षिस्तु मन्त्रस्य यत आदौ त्वयैव तु ।
ज्ञातस्सद्दशशिष्येभ्यः ततः प्रख्यापयिष्यसि ॥८१॥

गायत्री छन्द एतस्य बीजमुक्तं तु पूर्वतः ।

---

(1) श्रीं (2) सीतायै (3) स्वाहा

नमश्शक्तिः कीलकं तु सीतायै (4) इति कीर्तितम् ॥
षड्दीर्घभाजा बीजेन षडङ्गन्यासकल्पना ॥

अथ ध्यानम्—

षट्कोणे मद्धग्रभागे कनकजलरुहे सीदतो राघवेन्दो
रङ्कस्थां पद्महस्तां मणिखचितमहाभूषणोदारभासम् ।
तप्तस्वर्णाभदेहां रघुपतिवदनाम्भोजविन्यस्तदृष्टिं
मन्दस्मेरां मनोऽब्जे मुनिगणविनुतां जानकीं भावयामि॥
वर्णलक्षं जपेन्मन्त्रं ततस्सिद्धिमवाप्नुयात् ॥८४॥

राममन्त्रेण संयोज्य सीतामन्त्रं जपेत्तु यः ।
तस्याऽऽदेहं सर्वसुखं कैवल्यं तु ततो भवेत् ॥८५॥

कुङ्कुमेऽष्टदळं पद्ममालिख्याऽत्राक्षराणि यः ।
मन्त्रस्यादौ तथाऽन्ते च गौर्या बीजं तथा भुवः ॥८६॥

जप्त्वाऽयुतं कुङ्कुमं तत् मत्वा सीताशरीरकम् ।
नीराजनान्तोपचारान् कृत्वा भक्तिप्रतीरितः ॥८७॥

शिरसा कुङ्कुमं धृत्वा कुबेरादपि ऋद्धिमान् ।
भवेत् भूतपिशाचादिग्रहपीडां व्यपोहयेत् ॥८८॥

राममन्त्रविहीनस्तु सीतामन्त्रं तु यो जपेत् ।
न कदाचित्तस्य सिद्धिः नरकश्चापि शाश्वतः ॥८९॥

राममालामन्त्रजपानन्तरं जानकीं हृदा ।
ध्यात्वा मालामनुं तस्याः प्रजपेत्तु जितेन्द्रियः ॥

---

(4) स्पष्टप्रतिपत्तये नकृतस्सन्धिः ॥

(तदित्थम्) आदौ नमो भगवति मैथिलीति ततःपरम् ।
त्रिलोकजननि ब्रूयात् राघवप्राणवल्लभे ॥
वदेत्ततो राक्षसान्तकारिणीति पदं वदेत् ।
शुद्धसत्वस्वरूपेऽथ नमस्ते नम इत्यथ ॥
मालामन्त्रोऽयमाख्यातः प्रणवादिश्च सर्वदः ।
* सीताराघवमन्त्रौ तु मुक्त्यर्थं केवलं जपेत् ।
अनयोस्तर्पणे होमे न निर्बन्धः कदाचन ॥९३॥
यत्सङ्ख्यया राममन्त्रं प्रजपेत्साधको व्रती ।
तन्न्यूनसङ्ख्यया सीतामन्त्रो जप्यो मनीषिभिः ॥९४॥
भृगुवारे च फल्गुन्या मुत्तरायां च पर्वणि ।
ततोऽधिकं च प्रजपेत् अन्यथा सिद्धिरल्पिका ॥९५॥
सीतारामौ हृदाऽऽभाव्य प्रजपन् हनुमन्मनुम् ।
प्रयोगान् साधयेत्तेन विन्देत् सर्वमनोरथान् ॥९६॥
न कदाचित् प्रयोगार्हौ सीताराघवमन्त्रकौ ।
तथाकृते प्रकुपितो हनुमान् सिद्धिभङ्गकृत् ॥९७॥
इति ते सर्वमाख्यातं साधयामि नृपोत्तम ।

सनत्कुमारः—

इत्युक्त्वा जनकेन्द्रेण पूजितः प्रययौ मुनिः ॥९८॥

---

* मालामन्त्रस्त्वेव मुक्तो भवति—तथाहि 'ओं नमो भगवति मैथिलि त्रिलोकजननि राघवप्राणवल्लभे राक्षसान्तकारिणि शुद्धसत्वस्वरूपे नमस्ते नमः' इति ॥

तस्मात् सीतां ज्ञानिनोऽपि पूजयन्ति मुमुक्षवः ।
त्वमप्येवं रामपत्नीं पूजय प्रयताशयः ॥९९॥

जप सीतामनुं पूतो ध्यात्वा तां जगदीश्वरीम् ।
एतत्ते कथितं सर्वं कहोळ मुनिसत्तम ॥१००॥

जनकागस्त्यसंवादं मयोक्तं प्रयतः पठन् ।
धनधान्यं पुत्रपौत्रान् यशश्च परमं भुवि ॥
परविद्यां च संप्राप्य तन्वन्ते मुक्तिमाप्नुयात् ॥

इत्यगस्त्यसंहितायां कहोळसनत्कुमारसंवादे
जनकाय कुंभसंभवोक्तं
सीतापूजाविधानं समाप्तम् ॥

---

इति श्रीरामभक्तिकल्पलतायां
उत्तरभागः समाप्तः ॥
श्री सीतारामाभ्यां नमः ॥

---